अथ पूर्वोपयुक्ता शर्मवर्मादिगणा ( अ० वे०२।३।१४–१५) ॥ यथा द्यौश्च पृथिवी च नविभीतो नरिष्यत । एवामेप्राणमाविभे १ । यथाहश्च रात्री च नविभीतो न रिष्यत एवामे० ।२। यथा सूर्यश्च चन्द्रश्च ३ । यथा ब्रह्म च क्षत्र च ४ । यथा सत्य चानृत च० ५ । यथा भूत च भव्यं च ६ । प्राणापानौ मृत्योर्मापात स्वाहा । द्यावापृथिवी उपश्रुत्यामा० सूर्यचक्षुषा मा पाहि० । अग्ने वैश्वानर विश्वैर्मा देवै पाहि । विश्वभर विश्वेन मा भर मा पाहि ५ ॐ जोस्योजो मेदा स्वाहा सहोसि सहोमदा बलमसि बल मेदा । आयुरस्यायुर्मेदा । श्रोत्रमसि श्रोत्र मेदा । चक्षुरसि चक्षुर्मेदा । परियाणमसि परियाण मेदा । तुभ्यमेव जरिमन्वर्धता यय मेममन्येमृत्यवोहिंसिषु शत ये । मातेव पुत्र प्रमना उपस्थे मित्र एनमियात्यात्व हस । मित्र एन वरुणो मारिधादजरा मृत्यु कृणुतो सविद्वानौ । तदग्निर्होता वयुनानि विद्वान्विश्वा देवाना जानि मा विवक्ति । त्वमीशिष पशूनो पार्थिवानो ये जाता उत वा ये जनित्रा । मेम प्राणो हासीन्मो अपानो मेम मित्रा वधिषुर्मो आमित्रौं । द्यौष्ट्वा पिता पृथिवी माता जरामृत्यु कृणुता सविद्वाने । यथा जीवा आदितेरुपस्थे प्राणापानाभ्या गुपित शत हि मा । इममग्न आयुष वर्चसे प्रिय रेतो वरुण मित्रराजन् । माते वाऽस्मा अदिते शर्म यच्छन् विश्वे देवा जरदष्टिर्यथासत् । अक्षीभ्या ते नासिकाभ्या कर्णाभ्या चुबुकादधि । यक्ष्म शीर्षण्य मस्तिष्काज्जिह्वाया विवृहामि ते । ग्रीवाभ्यस्त उष्णिहाभ्य कीकसाभ्यो अनूक्यात् । यक्ष्म दोषण्यामसाभ्या बाहुभ्या विवृहामि ते २ । हृदयात्ते परिक्लोम्नोहलीक्ष्णात्पार्श्वाभ्या । यक्ष्म मतस्नाभ्या प्लीह्नायकृस्नविवृहामसि । आन्त्रेभ्यस्ते गुदाभ्योऽवनिष्ठोरुदरादधि । यक्ष्म कुक्षिभ्या प्लाशेर्नाभ्याविवृहामि ते । ऊरुभ्यां तेष्ठीवद्भ्या पार्ष्णिभ्या प्रपदाभ्या । यक्ष्म भसद्याश्रोणिभ्या भसदभसो विवृहामि त । अस्थिभ्यस्तेमज्जभ्य स्नावभ्यो धमनिभ्य । यक्ष्म पाणिभ्यामङ्गुलिभ्यो नखेभ्यो विवृहामि ते । अग अगे लोम्नि लोम्नि यस्ते पर्वणि पर्वणि । यक्ष्मत्वचस्यते वय कश्यपस्य विवर्हेण विश्व च विवृहामसि । ७ । मुचामि त्वा हविषा जीवनायकमज्ञातयक्ष्मा दुतराजयक्ष्मात् । ग्राहिर्जग्राह यद्यतदेन तस्या इन्द्राग्नीप्रमुमुक्तमन २ । यदि क्षितायु यदि वा परेता यदि मृत्योरन्तिक नीत एव । तमाहरामि निर्ऋतेरुपस्थादस्पार्षमन शत शारदाय २ । सहस्राक्षेण शतवीर्येण शतायुषा हविषा हार्षमन । इन्द्रो यथेन शरदो न यात्यति विश्वस्य दुरितस्य पार । शत जीव शरदो वर्द्धमान शत हेमतान् शतमु वसतान् । शत त इन्द्रो अग्नि सविता बृहस्पति शतायुषा हविषा हार्षमन । प्रविश त प्राणापानावनड्वाहाविवव्रत । का०न्यय तु मृ पत्रोयनाहुरितरान् शत ॥ इहैवस्तप्राणापानौमापगातमितो युव । शरीरमस्याङ्गानि जरसेव हत पुन जराये त्वा परिददामि जराये निर्धुवामि त्वा । जरा त्वा भद्रानेष्टव्यन्यय तु मृ यन्त्रायो नाहुरितरान् शत ।

उत देवा अवहित देव उन्न यथा पुन । उतागश्चकुष देवा देवा जीवयथापुन ।

---

१ यदनमदर–नोयात । २ यदयअनर्दय–हिंसिषु । ३ ई–शतये न–शतिय । ४ नम–ति । ५ धयचवरअ–अमित्री । ६ घ–प्रविदाना । ७ घ विवृह मिते । ८ च–मु ।

द्वाविमौ वातौ वात आसिंधोरापरावतः । दक्षं ते अन्य आवातु व्यन्यो वातु यद्रपः ।
आवातवाहिभेषजं विवातवाहि यद्रपः । त्वं हि विश्वभेषजो देवानां दूत ईयसे ॥
त्रायंतामिह देवास्त्रायतां मरुतां गणाः । त्रायंतां विश्वा भूतानि यथायमरपा असत् ॥
आत्वागमं शंतातिभिरथो अरिष्टतातिभिः । दक्षं त उग्रमाभारिषं परायक्ष्मं सुवामि ते ॥
अयं मे हस्तो भगवानयं मे भगवत्तरः । अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः ।
हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी । अनामयित्नुभ्यां हस्ताभ्यां ताभ्यां त्वाभि मृशामसि॥
आवतस्त आवतः परावतस्त आवतः । इहैव भवमानुगा मा पूर्व्याननुगाः पुत्रेन सुबध्नामि ते दृढं ॥
यत्त्वाभिचेरुःपुरुषः स्वोयदरणोजनः । उन्मोचनप्रमोचने उभे वाचा वदामि ते ॥
यद्दुद्रोहितशेपिशेस्त्रियै पुंसे अचित्त्या । उन्मोच्यित्रून सोमात् कृताच्छेये पितृताच यत् ॥
उन्मो० यत्ते माता यत्ते पिता जामिर्भ्राता च सर्जतः । प्रत्यक्सेवस्व भेषजं जरदष्टिं कृणोमि त्वा ॥
इहैवधिपुरुष सर्वेण मनसा सह । दूतौ यमस्वमानुगा अधिजीव पुरा इहि ॥
अनुमृत पुनरेहि विद्वान् उदयनं पथः । आरोहणमाक्रमणं जीवतो जीवत्तोयनं ।
माबिभेर्न मरिष्यसि जरदष्टिं कृणोमि त्वा । निरवोचमहं यक्ष्ममंगेभ्यो अंगज्वरं तव ॥
अंगभेदो अंगज्वरो यश्च ते हृदयामयः । यक्ष्मश्येन इव प्रापप्तद्वाचासाढः परस्तरां ॥
ऋषीबोधप्रतीबोधावस्वप्नो यश्च जागृविः । तौ ते प्राणस्य गोप्तारौ दिवानक्तं च जागृतां ॥
अयमग्निरुप सद्य इह सूर्य उदेतु ते । उदेहि मृत्योर्गंभीरात्कृष्णाच्चित्तमसस्परि ॥
नमो यमाय नमो अस्तु मृत्यवे । नमः पितृभ्य उत येन यंति ॥
उत्पारणस्य यो वेद तमग्निं पुरोदधेस्मा अरिष्टतातये ॥
ऐतु प्राण ऐतु मन ऐतु चक्षुरथो बलं । शरीरमस्य संविदां तत्पद्भ्यां प्रतितिष्ठतु ॥
प्राणेनाग्ने संसृजतु वातः प्राणो न संदितः । प्राणेन विश्वतो मुखं सूर्यं देवा अजनयन् ।
आयुष्यायुःकृतां जीवायुष्मान् जीव मा मृथाः । प्राणेनात्मन्वतां जीवा मामृत्योरुदकावशं देवानां निहितं निधिं ।
यमिंद्राग्निर्विंदत् पथिभिर्देवयानैः । आपो हिरण्यं जगुपुस्त्रिवृद्भिस्तास्त्वा रक्षंतु त्रिवृता त्रिवृद्भिः ॥
त्रींस्त्राप्रांस्त्रीन्समुद्रांस्त्रीन् ब्रध्नांस्त्रीन्वैष्टपांस्त्रीन्मातृश्वनस्त्रीन् सूर्यान् गोप्तृन् कल्पयामि ते ॥
उषाप्रियं यनिभ्रंतं युवानं माहुनीगृभं । अगन्म बिभ्रतो नमो दीर्घमायुः कृणोतु मे ॥
अंतकाय मृत्यवे नमः प्राणापाना इह ते रमंतां । इहायमस्तु पुरुषः सहासुना सूर्यस्य भागे अमृतस्य लोके ॥
उदेनं भगो अग्रभीदुदेनं सोमो अंशुमान् । उदेनं मरुतो देवा उदिंद्राग्नी स्वस्तये ॥
इह ते सुरिहप्राण इहायुरिह मनः । उत्पाशान्निर्ऋत्याः पाशेभ्यो दैव्या वाचा भरामसि ॥
उत्क्रामातः पुरुषमावपत्थामृत्योः पड्वीशमवमुंचमानः । माच्छित्था अस्माल्लोकादग्नेः सूर्यस्य संदृशः ॥
तुभ्यं वातः पवतां मातरिश्वा तुभ्यं वर्षंत्वमृतान्यापः । सूर्यस्ते तन्वे शं तपाति त्वां मृत्युर्दयतां मा प्रमेष्ठाः ॥

१ ख–द्रयः । २ ख–वः । ३ यटअनचघष–यमस्य । ४टयअनघव–भदर्भंगेभ्यो । ५यटअनघव उत्तारणस्य । ६ घ–अजनयन् । ७ टयअच–मृथा; घन–मूथा । ८ घ–प्राणेनात्मनतां जीवामः घवन–ता अईटय–प्राणेनात्मनी जीवामा । ९ घ–त्रवृता ।

उद्यानं ते पुरुषनावनावयानं जीवांतुं ते दक्षतातिं कृणोमि ।
ओंहिरोमरर्ममृतं सुख रथमथाभिर्विचिंद्र्यमवदासि । मा ते मनस्तत्र गान्मातिरोमून्मा जीविम्यः ।
प्रमदो मानुगाः पितून । विश्वेदेवा अभिरथंतु त्वेहामागतान्ममादीधीयायेन न 'यंति परावतं ॥७॥
आरोह तमसो ज्योतिरेह्याते हस्तैरमामहे । श्यामश्च त्वा मा शबलश्च प्रेषितौ यमस्य यौ पथिरपीश्वानौ ॥
अर्वाहेहि मा विदीधो मात्रविष्ठः पराम्ङ्मनाः । मेनं पंथामनुगा भीम एष येन पूर्वं नूपथ तं ब्रवीमि ।
तमएतत्पुरुषमाभयस्छम्नयं परस्ताश्रमयं ते अर्वाक् ॥१० ॥
द्विपदाः रक्षंतु त्वाऽग्नयो ये अप्स्वंता रक्षंतु त्वा मनुष्या ॥ ३ ॥
यमिंधते वैश्वानरो रक्षतु जातवेदा दिव्यस्त्वामाप्रधागिवद्युता सह: ।
मा त्वा क्रव्यादभिमंस्तारात्संकसुकाच्चे ।
रक्षतु त्वा द्यौ रक्षतु पृथिवी सूर्यश्च रक्षतामस्वमश्च त्वा रक्षतां चंद्रमाश्च । अंतरिक्षं रक्षतु देवहेत्याः
बोधश्च त्वा प्रतीबोधश्च रक्षतामस्वप्नश्च त्वा नवद्राणश्च रक्षतां । गोपायंश्च त्वा जागृविश्च रक्षतां ॥
ते त्वा रक्षंतु ते त्वा गोपायंतु तेभ्यो नमस्तेभ्यः स्वाहा ।
जीवेभ्यस्त्वा समुद्देवायुरिंद्रो धाता दधातु सविता त्रायमाणः । मा त्वा प्राणो बलंहासीदसंतेतुन्ह्यामति ।
मा त्वा जंभः संहनुर्मातमोविदन्मार्वर्हिः प्रमयुः कथास्याः । उत्वादित्या वसवो मरंतुइंद्राग्नी स्वस्तये ॥
उ त्वा द्यौरुत्पृथिव्युत्प्रजापतिरब्रवीत् । उत्वा मृत्यारोषधयः सोमराज्ञीरपीपरन् ॥
अयं देवा इहैवास्त्वयं मा पुत्रगादितः । इमं सहस्रवीर्येण मृत्योरुत्पातयामपि ॥
उत्वा मृत्योरपीपरं "संबंधंतु वयोधतः । मा त्वा व्यस्तकेश्यो मा त्वा पुरुदोरुदन् ।
आर्षमेमिदं त्वा पुनरागाः पुनर्णवः । सर्वांगसर्वं ते चक्षुः सर्वमायुश्च ते विदन् ।
व्यवा ते ज्योतिरभूदयत्वत्तमो अक्रमीत् । अपेत्वन्मृत्युं निर्ऋतिमपयक्ष्मं निदधासि ।
आरमस्वे मेमृतस्य श्नुष्टिरच्छिद्यमाना जरदृष्टिरस्तु ते ।
असु त आयुः पुनरामरामि रजस्तमो मोपगा मा प्रमेष्ठा ।
जीवतां ज्योतिरभ्येह्यर्वाङ्हात्वा हरामि शत शारदाय ।
अव मुंच मृत्युपाशानशस्तिं द्राधीय आयुः प्रतरं ते दधामि । वातात्ते प्राणमविदन्सूर्याच्चक्षुरिदं तव ।
यत्तेमरंस्त्वयि तद्धारयामि संविस्सांगैर्मदाजिव्हया लपन् ॥
प्राणेन त्वां द्विपदां चतुष्पदामग्निमिव जानमभिसंधमोसि । नमस्ते मृत्यो चक्षुषे नमः प्राणाय ते करन् ।
अयं जीवतु मा मृतेयंसमेरपामसि । कृणोम्यस्मै भेषजं मृत्यो मा पुरुषं वधीं ।
जीवलानघारिषाजीवंतीमोषधामहं । त्रायमाणां सहमानां सहस्वतीमिह हुवे स्माअरिष्टतातये ।
अधिब्रूहि मारभथाः सजेमं तवैव संछर्वस्ताया इहास्तु ॥
भवाशर्वौ मढतं शर्वं यच्छ तमायासेध्यदुरितं धत्तमायुः । अस्मे मृत्यो अधिब्रूहि मंदयस्त्रोद्दितो ॥
यमे तु । अरिष्टः सर्वांगः समुर्जरसाशतहायन आत्मना भुजमश्नुतां ।

---

१ घ-पुरुषनावयानं । २ यटघटअनव-जीवातु ते । ३ टयनवईकय-अहिरोमाम्रतं । ४ घ-रोममृतं । ५ यटवअनश्यई-विश्वेदेवा । ६ झ-यं ययति । ७ झ-चार । ८ घ-आजिन्हावहि । ९ घ-तु । १० घ-सबधंतु । ११ घ- इपा, बघनं-शोपि, टयअ-स्योपि । १२ घ-आर्वमदं; टयनवघअ-आर्यमणिद । १३ घ-दां । १४ घ-अमा, नव-अयत्वं, टयअ-आयंत्व । १५ घ-रचे । १६ घ-तु विष्ठ । १७घ-असुं; घनव-आसुं, ई असुनं । १८ घच-मा;-ई-चरयामि यटवमन, ईघअटयनव-चांगेभा । १९ घ-संधामि; कवयटघअनई-संधमानि । २० टयघनअई-मायुप वधी । २१ झ-ते । २२ ई-धर्मसंरयाजितिविर्द्यवश । २३ घनव-मारमातु; टयअई-आप्मान ।

देवानां हेतिः परि त्वा वृणक्तु पारयामि त्वा रजस उत् त्वा मृत्योरपीपरम् ।
आरादग्निं क्रव्यादं निरूहं जीवातवे ते परिधिं दधामि ॥ ९ ॥
यत्ते नियानं रजसं मृत्यो अनवधर्ष्यम् । पथ इमं तस्माद्रक्षंतो ब्रह्मास्मै वर्म कृण्मसि ॥ १० ॥
कृणोमि ते प्राणापानौ जरां मृत्युं दीर्घमायुः स्वस्ति ॥
वैवस्वतेन प्रहितान्यमदूतांश्चरतोऽप सेधामि सर्वान् ॥ ११ ॥
आरादरातिं निर्ऋतिं परो ग्राहिं क्रव्यादः पिशाचान् । रक्षो यत्सर्वं दुर्भूतं तत्तम इवाप हन्मसि ॥१२॥
अग्नेष्टे प्राणममृतादायुष्मतो वन्वे जातवेदसः ॥
यथा न रिष्या अमृतः सजूरसस्तत्ते कृणोमि तदु ते समृध्यताम् ॥ १३ ॥
शिवे ते स्तां द्यावापृथिवी असंतापे अभिश्रियौ । शं ते सूर्य आतपतु शं वातो वातु ते हृदे ।
शिवा अभिक्षरंतु त्वा आपो दिव्याः पयस्वतीः ॥ १४ ॥
शिवास्ते संत्वोषधय उत्वाहार्षमधरस्या उत्तरां पृथिवीमभि ।
तत्र त्वादित्यौ रक्षतां सूर्याचंद्रमसावुभा ॥ १५ ॥
यत्ते वासः परिधानं यां नीविं कृणुषे त्वम् । शिवं ते तन्वे ३ तत्कृण्मः संस्पर्शेऽद्रूक्ष्णमस्तु ते ॥१६॥
यत् क्षुरेण मर्चयता सुतेजसा वप्ता वपसि केशश्मश्रु । शुभं मुखं मा न आयुः प्रमोषीः ॥ १७ ॥
शिवौ ते स्तां व्रीहियवावबलासावदोमधौ । एतौ यक्ष्मं वि बाधेते एतौ मुंचतो अंहसः ॥ १८ ॥
यदश्नासि यत्पिबसि धान्यं कृष्याः पयः । यदाद्यं ३ यदनाद्यं सर्वं ते अन्नमविषं कृणोमि ॥१९॥
अन्हे च त्वा रात्रये चोभाभ्यां परि दद्मसि । अरायेभ्यो जिघत्सुभ्य इमं मे परिरक्षत ॥ २० ॥
शतं ते युतं हायनान्द्वे युगे त्रीणि चत्वारि कृण्मः । इंद्राग्नी विश्वे देवास्तेनुमन्यंतामहृणीयमानाः ॥२१॥
शरदे त्वा हेमंताय वसंताय ग्रीष्माय परिदद्मसि । वर्षाणि तुभ्यं स्योनानि येषु वर्धंत ओषधीः॥२२॥
मृत्युरीशे द्विपदां मृत्युरीशे चतुष्पदाम् । तस्मात्त्वां मृत्योर्गोपतेरुद्भरामि स मा बिभेः ॥ २३ ॥
सोऽरिष्ट न मरिष्यसि न मरिष्यसि मा बिभेः । न वै तत्र म्रियन्ते नो यंत्यधमं तमः ॥ २४ ॥
सर्वो वै तत्र जीवति गौरश्वः पुरुषः पशुः । यत्रेदं ब्रह्म क्रियते परिधिर्जीवनाय कम् ॥ २५ ॥
परि त्वा पातु समानेभ्यो अभिचारात्सबंधुभ्यः । अमम्रिर्भवामृतोऽतिजीवो मा ते हासिषुरसवः शरीरम् ॥२६॥
ये मृत्यव एकशतं या नाष्ट्रा अतितार्याः । मुंचंतु तस्मात्त्वां देवा अग्नेर्वैश्वानरादधि ॥ २७ ॥
अग्नेः शरीरमसि पारयिष्णु रक्षोहासि सपत्नहा । अथो अमीवचातनः पूतुद्रुर्नाम भेषजं ॥
प्राणाय नमो यस्य सर्वमिदं वशे । यो भूतः सर्वस्येश्वरो यस्मिन्सर्वं प्रतिष्ठितं ॥ (११।४।१)
नमस्ते प्राण क्रंदाय नमस्ते स्तनयित्नवे । नमस्ते प्राण विद्युते नमस्ते प्राण वर्षते ॥ २ ॥
यत्प्राण स्तनयित्नुनाभिक्रंदत्योषधीः । प्रवीयन्ते गर्भान्दधतेऽथो बह्वीर्विजायंते ॥३॥
यत्प्राण ऋतावागतेऽभिक्रंदत्योषधीः । सर्वं तदा प्रमोदते यत्किं च भूम्यामधि ॥ ४ ॥
यदा प्राणो अभ्यवर्षीद्वर्षेण पृथिवीं महीं । पशवस्तत्प्र मोदंते महो वै नो भविष्यति ॥ ५ ॥
अभिवृष्टा ओषधयः प्राणेन समवादिरन् । आयुर्वै नः प्रातीतरः सर्वा नः सुरभीरकः ॥ ६ ॥

---

१ कघव-पृथ; घटयअ-यथा; २ रिष्या इति मुद्रितपाठः । ३ घअनयर्ध्वं-यार्थनंकृणुयेत्वं । ४ घ-द्रि, कघटयवअन-द्रश्न ई-इरआरास्तुते । ५ नग्रघ-चस्र,-कईटअ-च्मल । ६ टयवनअसईर-ष्याः यवः ७ झ-यदंताय । ८ घ-दे । ९ इअघटमधर-अयाप्रि । १० कघअनटयवईर +रवः । (शरीरं) ११ रईअय-ईलवघ-थे । १२ कघईरयअनव-वस्रो । १३ घनटयवअ-आग्न-१४ घअनट्वर्ई सुरभी करत् ।

नमस्ते अस्त्वायते नमो अस्तु परायते । नमस्ते प्राण तिष्ठत आसीनायोत ते नमः ॥ ७ ॥
नमस्ते प्राण प्राण ते नमो अस्त्वापान ते । पराचीनाय ते नमः प्रतीचीनाय ते नमः ॥
सर्वस्मै त इदं नमः ॥८॥
या ते प्राण प्रिया तनूर्या ते प्राण प्रेयसी । अथो यद्भेषजं तव तस्य नो धेहि जीवसे ॥ ९ ॥
प्राणः प्रजा अनु वस्ते पिता पुत्रमिव प्रियं । प्राणोह सर्वस्येश्वरो यच्च प्राणति यच्च न ॥ १० ॥
प्राणो मृत्युः प्राणस्तक्मा प्राणं देवा उपासते । प्राणो ह सत्यवादिनमुत्तमे लोक आ दधत् ॥ ११ ॥
प्राणो विराट् प्राणो देष्ट्री प्राणं सर्व उपासते । प्राणो ह सूर्यश्चंद्रमाः प्राणमाहुः प्रजापतिं ॥ १२ ॥
प्राणापानौ व्रीहियवावनड्वान्प्राण उच्यते । यवे ह प्राण आहितो अपानो व्रीहिरुच्यते ॥ १३ ॥
अपानति प्राणति पुरुषो गर्भे अंतरा । यदा त्वं प्राण जिन्वस्यथ स जायते पुनः ॥ १४ ॥
प्राणमाहुर्मातरिश्वानं वातो ह प्राण उच्यते । प्राणे ह भूतं भव्यं च प्राणे सर्वं प्रतिष्ठितं ॥१५॥
आथर्वणीरांगिरसीर्दैवीर्मनुष्यजा उत । ओषधयः प्र जायंते यदा त्वं प्राण जिन्वसि ॥ १६ ॥
यदा प्राणो अभ्यवर्षीद्वर्षेण पृथिवीं महीं । ओषधयः प्र जायंतेऽथो याः काश्च वीरुधः । १७॥
यस्ते प्राणेदं वेद यस्मिंश्चासि प्रतिष्ठितः । सर्वे तस्मै बलिं हरानमुष्मिंल्लोक उत्तमे ॥ १८ ॥
यथा प्राण बलिहृतस्तुभ्यं सर्वाः प्रजा इमाः । एवा तस्मै बलिं हरान्यस्त्वा शृणवत्सुश्रवः ॥ १९॥
अंतर्गर्भश्चरति देवतास्वाभूतो भूतः स उ जायते पुनः ।
स भूतो भव्यं भविष्यत्पिता पुत्रं प्र विवेशा शचीभिः ॥ २० ॥
एकं पादं नोत्खिदति सलिलाद्धंस उच्चरन् । यदंग स तमुत्खिदेन्नैवाद्य न श्वः स्यात् ।
न रात्री नाहः स्यान्न व्युच्छेत्कदाचन ॥ २१ ॥
अष्टाचक्रं वर्तत एकनेमि सहस्राक्षरं प्र पुरो नि पश्चा ॥
अर्धेन विश्वं भुवनं जजान यदस्यार्धं कतमः स केतुः ॥ २२ ॥
यो अस्य विश्वजन्मन ईशे विश्वस्य चेष्टतः । अन्येषु क्षिप्रधन्वने तस्मै प्राण नमोस्तु ते ॥२३॥
यो अस्य सर्वस्य जन्मन ईशे सर्वस्य चेष्टतः । अतंद्रो ब्रह्मणा धीरः प्राणो मानु तिष्ठतु ॥ २४ ॥
ऊर्ध्वः सुप्तेषु जागार ननु तिर्यङ्नि पद्यते । न सुप्तमस्य सुप्तेष्वनु शुश्राव कश्चन ॥ २५ ॥
प्राण मा मत्पर्यावृतो न मदन्यो भविष्यति । अपां गर्भमिव जीवसे प्राण बध्नामि त्वा मयि ॥ २६॥

इत्यायुष्यगणः ॥

विषासहिं-सहमानं सासहानं सहीयांसम् । सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्या नाम ह्व-इन्द्रमायुष्मान् भूयासं ॥ ( १७।१।१–२० )
विषासहिमिति संपूर्णः पुनः । ईड्यं नामह्व इंद्रं प्रियो देवानां भूयासं ॥२॥ विषासहिं० ईड्यं० इंद्रं प्रियः प्रजानां० ।३। विषा० ईड्यं० इंद्रं प्रियः पशूनां० ।४। विषा० ईड्यं० इंद्रं प्रियः समानानां० ।५।
उदिह्युदिहि सूर्यवर्चसा माभ्युदिहि । द्विषंश्च मह्यं रध्यतु मा चाहं द्विषते रधं । तवेद्विष्णो बहुधा वीर्याणि । त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥ ६ ॥
उद्यन्नादित्यांश्च पश्यामि यांश्च न तेषु मा सुमतिं कृधि तवे० । त्वं नः प्रा० ॥ ७ ॥

---

१ अर्थरनवयबकथ-वेष्ट्र । २ घनब-प्राणोद । ३ सर्वपाठ ३ ईरअटयबघन स्त्वा ३ घ ते । ४ इत्यत्र नेति भवति । ५ ईरबअनटयघ पदमसन् शुश्रिवदे । ६ ईरटयअनघ सर्वद्ध । ७ ईटयबकनघ भवम । ८ छे तदन्यो । ८ घ एवं । ८ घरमठयर्थर सि

मा त्वा दभन्त्सलिले अप्स्वर्न्तर्ये पाशिन उपातिष्ठंत्यत्र शंतमो भव ॥
त्वं न इन्द्रोतिभिः शिवाभिः हित्वा शस्तिं दिवमारुक्ष एतां स नो मृड सुमतौ ते स्याम तवे०
आरोहंस्त्रिदिवं दिवो गृणानः सोमपीतये प्रियधामा स्वस्तये तवे० ॥ १० ॥
त्वं न इन्द्र महते सौभगायादब्धेभिः परि पाह्यक्तुभिः । तवे० ॥
त्वमिंद्रासि विश्वजित्सर्ववित्पुरुहूतस्त्वमिंद्र । त्वमिंद्रेमं सुहवंस्तोममेरयस्व
स नो मृड सुमतौ ते स्याम तवे० ॥ ११ ॥
अदब्धो दिवि पृथिव्यामुतासि न त आपुर्महिमानमंतरिक्षे ॥
अदब्धेन ब्रह्मणा वावृधानः स त्वं न इंद्र दिवि षं शर्म यच्छ । तवेंद्रि०॥ १२
या त इंद्र तनूरप्सु या पृथिव्यां यांतरग्नौ यात इंद्र पवमाने स्वर्विदि ॥
ययेंद्र तन्वा३न्तरिक्षं व्यापिथ तया न इंद्र तन्वा३शर्म यच्छ । तवे० ॥ १३ ॥
त्वामिंद्र ब्रह्मणा वर्धयंतः सत्रं निषेदुर्ऋषयो नाधमानाः तवे० ॥ १४ ॥
त्वं तृत त्वं पर्येष्युत्सं सहस्रधारं विदथं स्वर्विदं । तवे० ॥ १५ ॥
त्वं रक्षसे प्रदिशश्चतस्रस्त्वं शोचिषा नभसी वि भासि । त्वमिमा विश्वा भुवनानु तिष्ठ स ऋतस्य
पंथामन्वेषि विद्वांस्तवे० ॥ ( १६ ) ॥
पंचभिः पराङ् तपस्येकयार्वाङशस्तिमेषि सुदिने बाधमानस्तवेंद्रि० १७ ॥
त्वमिंद्रस्त्वं महेंद्रस्त्वं लोकस्त्वं प्रजापतिः । तुभ्यं यज्ञो वितायते तुभ्यं जुह्वति जुह्वतस्तवे० ॥१८॥
असति सत्प्रतिष्ठितं सति भूतं प्रतिष्ठितं । भूतं ह भव्य आहितं भव्यं भूते प्रतिष्ठितं । तवेंद्रि० ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥ १९ ॥
शुक्रोऽसि भ्राजोऽसि । स यथा त्वं भ्राजता भ्राजोऽस्येवाहं भ्राजता भ्राज्यासम् ॥ २० ॥
रुचिरसि रोचोऽसि । स यथा त्वं रुच्या रोचोऽस्येवाहं पशुभिश्च ब्राह्मणवर्चसेन च रुचिषीय ॥२१॥
उद्यते नम उदायते नम उदिताय नमः । विराजे नमः स्वराजे नमः सम्राजे नमः ॥ २२ ॥
अस्तंयते नमोऽस्तमेष्यते नमोऽस्तमिताय नमः । विराजे नमः स्वराजे नमः सम्राजे नमः ॥ २३ ॥
उदगादयमादित्यो विश्वेन तपसा सह । सपत्नान्मह्यं रंधयन्मा चाहं द्विषते रधं । तवेंद्रि० ॥
त्वं न पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥ २४ ॥
आदित्य नावमारुक्षः शतारित्रां स्वस्तये । अहर्मात्यपीपरो रात्रिं सत्राति पारय ॥ २५ ॥
सूर्य नावमारुक्षः शतारित्रां स्वस्तये । रात्रिं मात्यपीपरोऽहः सत्राति पारय ॥ २६ ॥
प्रजापतेरावृतो ब्रह्मणा वर्मणाहं कश्यपस्य ज्योतिषा वर्चसा च ॥
जरदष्टिः कृतवीर्यो विहायाः सहस्रायुः सुकृतश्चरेयम् ॥ २७ ॥
परीवृतो ब्रह्मणा० । मा मा प्रापन्निषवो दैव्या या मा मानुषीरवसृष्टा वधाय ॥ २८ ॥
ऋतेन गुप्त ऋतुभिश्च सर्वैर्भूतेन गुप्तो भव्येन चाहं ॥
मामा प्रापत्पाप्मा मोत मृत्युरंतर्दधेऽहं सलिलेन वाचः ॥ २९ ॥
अग्निर्मा गोप्ता परि पातु विश्वत उद्यन्त्सूर्यो नुदतां मृत्युपाशान् ॥
व्युच्छन्तीरुषसः पर्वता ध्रुवाः सहस्रं प्राणा मय्या यतन्ताम् ॥ ३० ॥

इत्यायुष्यगणः ॥

---

१ अनदयक्षध र्ही येम. २ ख-ष्ठा. ३ घ-प. ४ दं अदयथ मधावः; यन न यावः ।

# अथ सर्वस्पगणः ॥

ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः । वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ॥ १ ॥
पुनरेहि वाचस्पते देवेन मनसा सह । वसोष्पते नि रमय मय्येवास्तु मयि श्रुतम् ॥ २ ॥
इहैवाभि वि तनूभे आर्त्नी इव ज्यया । वाचस्पतिर्नि यच्छतु मय्येव० ॥ ३ ॥
उपहूतो वाचस्पतिरुपास्मान्वाचस्पतिर्ह्वयताम् । सं श्रुतेन गमेमहि मा श्रुतेन वि राधिषि ॥ ४ ॥
ऐभिरग्निर्वसुभिः पार्थिवैः पूषा वरुणो मित्रो अग्निः ॥
इममादित्या उत विश्वे च देवा उत्तरस्मिन् ज्योतिषि धारयन्तु ॥ १ ॥
अस्य देवाः प्रदिशि ज्योतिरस्तु सूर्यो अग्निरुत वा हिरण्यम् ॥
सपत्ना अस्मदधरे भवन्तूत्तमं नाकमधि रोहयेमम् ॥ २ ॥
येनेन्द्राय समभरः पयांस्युत्तमेन ब्रह्मणा जातवेदः ॥
तेन त्वमग्न इह वर्धयेमं सजातानां श्रैष्ठ्य आ धेह्येनम् ॥ ३ ॥
एषां यज्ञमुत वर्चो ददेहं रायस्पोषमुत चित्तान्यग्ने । सपत्ना० ॥ ४ ॥
प्रातरग्निं प्रातरिन्द्रं हवामहे सप्तऋचः ॥ प्रथमायां द्वितीयायां तृतीयेस्यश्च हवामहे ॥
उतेदानीं भगवन्त० ॥ अस्तु देवस्तेना वर्च० ॥ अमु विद्ं मणं मे० ॥
हस्तिवर्चसं प्रथतां बृहद्यशो अदित्या यत्तन्वः संबभूव ॥
तत्सर्वे समदुर्मह्यमेतद्विश्वे देवा अदितिः सजोषाः ॥ १ ॥
मित्रश्च वरुणश्चेन्द्रो रुद्रश्च चेततु । देवासो विश्वधायसस्ते माञ्जन्तु वर्चसा ॥ २ ॥
येन हस्ती वर्चसा संबभूव येन राजा मनुष्येष्वप्स्व ॥
येन देवा देवतामग्र आयन्तेन मामद्य वर्चसाग्ने वर्चस्विनं कृणु ॥ ३ ॥
यत्ते वर्चो जातवेदो बृहद्भवत्याहुतेः । यावत्सूर्यस्य वर्च आसुरस्य च हस्तिनः ॥
तावन्मे अश्विना वर्च आ धत्तां पुष्करस्रजा ॥ ४ ॥
यावच्चतस्रः प्रदिशश्चक्षुर्यावत्समश्नुते । तावत्समैत्विन्द्रियं मयि तद्धस्तिवर्चसम् ॥ ५ ॥
हस्ती मृगाणां सुषदामतिष्ठावान्बभूव हि । तस्य भगेन वर्चसाभि षिंचामि मामहम् ॥ ६ ॥
सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे या ॥ इन्द्रं या देवी० सा न ऐतु वर्चसा० ॥ १ ॥
यशो हविर्वर्धतामिन्द्रजूतं सहस्रवीर्यं सुभृतं सहस्कृतम् ॥
यः प्रसर्स्राणमनु दीर्घाय चक्षसे हविष्मन्तं मा वर्धय ज्येष्ठतातये ॥ २ ॥
अच्छा न इन्द्रं यशसं यशोभिर्यशस्विनं नमसाना विधेम ॥
नो रास्व राष्ट्रमिन्द्रजूतं तस्य ते रातौ यशसः स्याम ॥ २ ॥
यशा इन्द्रो यशा अग्निर्यशाः सोमो अजायत । यशा विश्वस्य भूतस्याहमस्मि यशस्तमः ॥ ३ ॥
यशसं मेन्द्रो मघवान् कृणोतु यशसं द्यावापृथिवी उभे इमे ॥
यशसं मा देवः सविता कृणोतु प्रियो दातुर्दक्षिणाया इह स्याम् ॥ १ ॥
यथेन्द्रो द्यावापृथिव्योर्यशस्वान् यथाप ओषधीषु यशस्वतीः ॥
एवा विश्वेषु देवेषु वयं सर्वेषु यशसः स्याम ॥ २ ॥ यशा इंद्रो यशा अग्नि० ॥ ३ ॥

---

१ कटम–मे

१ अ. वे. सं. १।१।१–४। श–सप्ता। २ अ. वे. सं. १।१।१–४। ३ अ. वे. सं. ३।१६। ४ अ. वे. ३।३३। ५ अ. वे. सं. ६।३८।२५।१।१ ६ अ. वे. सं. ६।६।५८

गिरावरगराटेषु हिरण्ये गोषु यद्यशः। सुरायां सिच्यमानायां कीलाले मधु तन्मयि ॥ १ ॥
अश्विना सारघेण मा मधुनाङ्क्तं शुभस्पती। यथा मर्गस्वतीं वाचमावदानि जनाँ अनु ॥ २ ॥
मयि वर्चो अथो यशोऽथो यज्ञस्य यत्पयः। तन्मयि प्रजापतिर्दिवि द्यामिव दृंहतु ॥ ३ ॥
यथा सोमः प्रातःसवने अश्विनोर्भवति प्रियः। एवा मे अश्विना वर्च आत्मनि ध्रियताम् ॥ ११ ॥
यथा सोमो द्वितीये सवन इंद्राग्न्योर्भवति प्रियः। एवा म इंद्राग्नी वर्च आत्मनि ध्रियताम् ॥१२॥
यथा सोमस्तृतीये सवन ऋभूणां भवति प्रियः। एवा मे ऋभवो वर्चश्च ध्रियतां ॥ १३ ॥
येद्गिरिषु पर्वतेषु गोष्वश्वेषु यन्मधु। सुरायां सिच्यमानायां यत्तत्र मधु तन्मयि ॥ १८ ॥
अश्विना सारघेण मा मधुनाङ्क्तं शुभस्पती। यथा वर्चस्वतीं वाचमावदानि जनाँ अनु ॥ १९ ॥
स्तनयित्नुस्ते वाक् प्रजापते वृषा शुष्मं क्षिपसि भूम्यां दिवि ॥
तां पशव उप जीवंति सर्वे तेनो सेषमूर्जं पिपर्ति ॥ २० ॥
पृथिवी दंडोऽन्तरिक्षं गर्भो द्यौः कशा विद्युत्प्रकशो हिरण्ययो बिंदुः ॥ २१ ॥
यो वै कशायाः सप्त मधूनि वेद मधुमान् भवति।
ब्राह्मणश्च राजा च धेनुश्चानड्वांश्च व्रीहिश्च यवश्च मधु सप्तमम् ॥ २२ ॥
मधुमान् भवति मधुमदस्याहार्यं भवति। मधुमतो लोकान् जयति य एवं वेद ॥ २३ ॥
यद्वीध्रे स्तनयति प्रजापतिरेव तत्प्रजाभ्यः प्रादुर्भवति। तस्मात्प्राचीनोपवीतस्तिष्ठेत्प्रजापतेऽनु
मा बुध्यस्वेति। अन्वेनं प्रजा अनु प्रजापतिर्बुध्यते य एवं वेद ॥ २४ ॥
येन वर्चोऽक्षेषु सुरायां च यदाहितं। यद्वाश्विना वर्चस्तेन मां वर्चसावतम् ॥ २५ ॥
येन महानघ्न्या जघनमश्विना येन वा सुरा। येनाक्षा अभ्यषिच्यन्त तेनेमां वर्चसावतम् ॥ २६ ॥
योऽनिध्मो दीदयदप्स्वन्तर्यं विप्रास ईडते अध्वरेषु ॥
अपां नपान्मधुमतीरपो दाया अभिरिन्द्रो वावृधे वीर्यावान् ॥ २७ ॥
इदमहं रुशन्तं ग्राभं तनूदूषिमपोहामि। यो भद्रो रोचनस्तमुदचामि ॥ २८ ॥
आ स्यै ब्राह्मणाः स्नपनीर्हरन्त्ववीरघ्नीरुदजन्त्वापः।
अर्यम्णो अग्निं पर्येतु पूषन्प्रतीक्षन्ते श्वशुरो देवरश्च ॥ २९ ॥
शं ते हिरण्यं शमु सन्त्वापः शं मेथिर्भवतु शं युगस्य तर्म ॥
शं त आपः शतपवित्रा भवंतु शमु पत्या तन्वं संसृजस्व ॥ वर्चस्यगणः समाप्तः ॥ ४० ॥
अमूः पारे पृदाक्वस्त्रिषप्ता निर्जरायवः।
तासां जरायुभिर्वयमक्ष्या३वपि व्ययामस्यघायोः परिपंथिनः ॥ १ ॥
विषूच्येतु कृन्तती पिनाकमिव बिभ्रती। विष्वक् पुनर्भुवा मनो असमृद्धा अघायवः ॥ २ ॥
न बहवः समशकन्नार्भका अभि दाधृषुः। वेणोरद्गा इवाभितोऽसमृद्धा अघायवः ॥ ३ ॥
प्रेतं पादौ प्रस्फुरतं वहतं पृणतो गृहान्। इंद्राण्येतु प्रथमाजीतामुषिता पुरः ॥ ३ ॥
पातं न इंद्रापूषणादितिः पांतु मरुतः। अपां नपात्सिन्धवः सप्त पातन पातु नो विष्णुरुत द्यौः ॥ १ ॥

---

१ अ. वे. सं. ६।६९।१-३। २ अटयवघन-वर्न। २ घ-अपि। ३ ङ-य। ४ घटयवअनई-हे। ५ घटयवअनर्दर-या; क-पा। ४ अ. वे. ९।१।११-१३। ६ अ. वे. सं. १४।१।३५-४०। ७ अ. वे. १४।२७।१-४। ८ अ. वे. ६।११।३।१-३

पातां नो द्यावापृथिवी अभिष्टये । पातु ग्रावा पातु सोमो नो अंहसः ।
पातु नो देवी सुभगा सरस्वती पात्वग्निः शिवा ये अस्य पायवः ॥ २ ॥
पातां नो देवाश्विना शुभस्पती उषासा नक्तोत न उरुष्यताम् ॥
अपां नपादभिहुती गयस्य चिद्देव त्वष्टर्वर्धय सर्वतातये ॥ ३ ॥
त्वष्टा मे दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः । पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुस्तरं त्रायमाणं सहः ॥ १ ॥
येन सोमादितिः पथा मित्रा वा यन्त्यद्रुहः । तेना नोऽवसा गहि ॥ १ ॥
येन सोम साहन्त्यासुरान् रन्धयासि नः । तेना नो अधिवोचत ॥ २ ॥
येन देवा असुराणामोजांस्यवृणीध्वं । तेना नः शर्म यच्छत ॥ ३ ॥
यथा वृक्षं लिबुजा समंतं परिषस्वजे । एवा परि ष्वजस्व मां यथा मां कामिन्यसो यथा मन्नापगा असः ॥ १
नमो देववधेभ्यो राजवधेभ्यः । अथो ये विश्यानां वधास्तेभ्यो मृत्यो नमोऽस्तु ते ॥ १ ॥
नमस्ते अधिवाकाय परावाकाय ते नमः । सुमत्यै मृत्यो ते नमो दुर्मत्यै त इदं नमः ॥ २ ॥
नमस्ते यातुधानेभ्यो नमस्ते भेषजेभ्यः । नमस्ते मृत्यो मूलेभ्यो ब्राह्मणेभ्य इदं नमः ॥ ३ ॥
अभयं मित्रावरुणाविहास्तु नो[1] अभयं सोमः सविता नः कृणोतु ।
अभयं नोऽस्तू[2] र्वन्तरिक्षं सप्तऋषीणां च हविषाभयं नो अस्तु ॥
अनमित्रं नो अधरादनमित्रं न उत्तरात् । इंद्रानमित्रं नः पश्चादनमित्रं पुरस्कृधि ॥ ३ ॥
उर्व[3] अगारसहस्राक्षो युक्त्वा शपथो रथम् । शप्तारमन्विच्छन्मम वृक इवाविमतो गृहं ॥ १ ॥
परि णो वृङ्ग्धि शपथ ह्रदमग्निरिवा दहन् । शप्तारमत्र नो जहि दिवो वृक्षमिवाशनिः ॥ २ ॥
यो नः शपादशपतः शपतो यश्च नः शपात् । वृक्ष इव विद्युता हत अमूलादनुशुष्यतु ॥
अनमित्रं नो अधरादनमित्रं न उत्तरात् । इंद्रानमित्रं नः पश्चादनमित्रं पुरस्कृधि ॥ ३ ॥
मनसे चेतसे धिय आकूतय उत चित्तये । मत्यै श्रुताय चक्षसे विधेम हविषा वयम् ॥ १ ॥
अपानाय व्यानाय प्राणाय भूरिधायसे । सरस्वत्या उरुव्यचे विधेम हविषा वयम् ॥ २ ॥
यमो[4] मृत्युरघमारो निर्ऋथो बभ्रुः शर्वोऽस्ता नीलशिखंडः ।
देवजनाः सेनयोत्तस्थिवांसस्ते अस्माकं परि वृजन्तु वीरान् ॥ १ ॥
मनसा होमैर्हविषा घृतेन शर्वायास्त्र उत राज्ञे भवाय ।
नमस्येभ्यो नम एभ्यः कृणोम्यन्यात्रास्मदघविषा नयंतु ॥ २ ॥
त्रायध्वं नो अघविषाभ्यो वधाद्विश्वे देवा मरुतो विश्ववेदसः ।
अग्नीषोमा वरुणः पूतदक्षा वातापर्जन्ययोः सुमतौ स्याम ॥ ३ ॥
बृहस्पतिर्नः० त्यमूषु० त्रातारमिंद्र० इंद्रः सुत्रामा । अभयं नः कृणोत्विति विशेषः । स सुत्रामा-
स्वत्रां० तस्य वयं । विपरीते १ आमंद्रैरिंद्र हरि० । वर्म मे द्यावापृथिवी वर्माहर्वर्म सूर्यः । वर्म
मे विश्वे देवाः क्रन्मा मा प्रापत्प्रतीचिका ॥ ( १९।२।२०।४ )
ऐंद्राग्नं वर्म बहुलं यदुग्रं विश्वेदेवा नातिविध्यंति सर्वे ।
तन्मे तन्वं त्रायतां सर्वतो बृहदायुष्मान् जरदष्टिर्यथासत् ॥ ( १९।५।३।१९ )
गिरयस्ते पर्वता हिमवंतोऽरण्यं ते पृथिवि स्योनमस्तु ।
बभ्रुं कृष्णां रोहिणीं विश्वरूपां ध्रुवां भूमिं पृथिवीमिन्द्रगुप्तां ॥

---

१ ययदवन-प्रेशो । १ ईअनघटय-चोतान॰, ब-त्वो ३ ह्र-स्यो । ४ घ-सत्पार ।

१ अ. सं. ६।१।४।१ २ „ ६।१।७।१-३ ३ „ ८।१ ४ अ. सं. ६।१३।१-३ ५—६।३।२।४ ६—६।४०।१।३ ७—६।४।३।४।१ ८—६।४१।१-३. ९—६।१०।६।३।१-३,

यत्ते मध्यं पृथिवि यच्च नभ्यं यास्त ऊर्जस्तन्वः संबभूवुः ।
तासु नो धेह्यभिनः १ पत्नः । पवस्व माता भूमिः पुत्रो अहं पृथिव्याः ॥ ( १२।१।११-१२ )
यास्ते प्राचीः प्रदिशो या उदीचीर्यास्ते भूमे अधराद्याश्च पश्चात् ।
स्योना जोस्ता मह्यं चरते भवंतु मा निपप्तं भुवने शिश्रियाणः ॥ १ ॥
मा नः पश्चान्मा पुरस्तान्नुदिष्ठा मोत्तरादधरादुत ।
स्वस्ति भूमे नो भव मा विदन्परिपंथिनो वरीयो यावया वधं ॥ ३२ ॥ स्वस्त्ययनगणः ॥
स्वातीदा विशांपतिर्वृत्रहा १ ॥ ( १।४।२१ )
ब्राह्मणेन पर्युक्तासि कण्वेन नार्षदेन । सेनेवैषि त्विषीमती न तत्र भयमस्ति यत्र प्राप्नोष्योषधे ॥
नै ता अर्वारेण० १ अभयं मित्रा वरुणा० १ अभयं द्यावापृथिवी इहास्तु नोधात्रिणोनु
दवर्त नः प्रतीचः । मा ज्ञातारं मा प्रतिष्ठां विंदंतमिथो विघ्नाना उपयंतु मृत्युं ॥ १ ॥
हतं तर्दं समंकमाखुमश्विना छिन्तं शिरो अपि पृष्टीः श्रिणीतं ।
यवान्नेदवानपिनह्यतं मुखमथाभयं कृणुतं धान्याय ॥ १ ॥
पूषेमा आस इंद्र सुत्रामा ५ एतं यथामनु भामीम एवायेन पूर्वं न्यैयय तं अवीति ।
तस्था एतत्पुरुषमानस्यामयं परस्तादभयं ते अर्वाक् । १ स्वस्तिदा विशांपतिः ॥ १ ॥
नमस्ते घोषिणीभ्यो नमस्ते केशिनीभ्यो नमो नमस्कृताभ्यो नमः संभुंजतीभ्यः ॥ ( ११।२।३१ )
आते राष्ट्रमिह रोहितोऽहार्षीद्व्यास्थन्मृधो अभयं ते अभूत् ।
तस्मै ते द्यावापृथिवी रेवतीभिः कामं दुहातामिह शक्वरीभिः ॥ १ ॥ ( १३।१।५ )
इदमुच्छ्रेयोऽवसानमागां शिवे मे द्यावापृथिवी अभूतां ।
असपत्नाः प्रदिशो मे भवंतु न वै त्वा द्विष्मो अभयं नो अस्तु ॥ ( १९।२।१४।१ )
यत इन्द्र भयामहे० ऊतिभिः ॥ अभयगणः ।
मा नो विदन्विव्याधिनो मो अभिव्याधिनो विदन् । आरात् शरव्या अस्मद्विषूचीरिंद्र पातय ॥१॥
विष्वंचो अस्मच्छरवः पतंतु ये अस्ता ये चास्याः । दैवीर्मनुष्येषवो ममामित्रान्वि विध्यत ॥ २ ॥
यो नः स्वो यो अरणः सजात उत निष्ठ्यो यो अस्माँ अभिदासति ।
रुद्रः शरव्ययैतान् ममामित्रान्वि विध्यतु ॥ ३ ॥
यः सपत्नो योऽसपत्नो यश्च द्विषं छपांतिनः ॥ देवास्तं सर्वे धूर्वंतु० ॥ ४ ॥
अदारसृद्भवतु० १ । यो अद्य सैन्यो वधोघायूनामुदीरते । युवं तं मित्रा वरुणावस्मद्यावयं परि ॥१॥
इतश्च यदमुतश्च यद्वधं वरुणे यावय । वि महच्छर्म यच्छ वरीयो यावया वधं ॥ ३ ॥
शास इत्था महां मित्रसाहो अस्तृतः । न यस्य० ४ । स्वस्तिदा विशांपति० १ । वि न इंद्र० १ । अधैमं
गन्या तमो यो अस्मां अभिदासति । पादव्यत्ययः । विरक्षो विमृ० । अपेंद्र द्वि० वि महच्छर्म० ।
२ संशितं म इदं ब्रह्म संशितं वीर्यं ५ बलं । संशितं क्षत्रमजरमस्तु जिष्णुर्येषामस्मि पुरोहितः
समहमेषां राष्ट्रं स्यामि समोजो वीर्यं ५ बलं । वृश्चामि शत्रूणां बाहूननेन हविषाहं ॥२॥ निचैः पद्यं-
तामधरे भवंतु ये नः सूरिं मघवानं पृतन्यात् । क्षिणामि ब्रह्मणामित्रानुन्नयामि स्वानहम् ॥ ३ ॥

---

१ यटयकयन-स्योना ता; ध-स्योनास्तर । २ अ. वे. १४।१९, १४।१९. ३—१।४।२१
४—६।४।३२ ५—६।५।५०।१ नकघर-हंततंद; यटअ-हततंदं; ई-हततादं । ६ टयवभघनवर-पूर्वे ।
७ घवयवअनर-मानो । ८ घटयअन-दं यावयः । ९-विश्वं चो- । १० -च्छिशाति न० । ११-शा ।
१२ रनटयवकय-अयगेषवा, अ-अयाध-मघमंगमया । १३ अ. वे. ३।१९।१-८. १४ घ-मघवानं;
१५ घअनर-मघवाजं. १६ अनघर-क्षुणाधि; घकं-क्षुणामि ।

तीक्ष्णीयांसः परशोरग्नेस्तीक्ष्णतरा उत । इंद्रस्य वज्रात्तीक्ष्णीयांसो येषामस्मि पुरोहितः ॥ ४ ॥
एषामहमायुधा सं स्याम्येषां राष्ट्रं सुवीरं वर्धयामि ।
एषां क्षत्रमजरमस्तु जिष्ण्वे १ षां चित्तं विश्वेऽवन्तु देवाः ॥ ५ ॥
उद्धर्षतां मघवन्वाजिनान्युद्वीराणां जयतामेतु घोषः ॥ पृथग्घोषा उलुलयः केतुमंत उदीरतं ॥ ६ ॥
देवा इन्द्रज्येष्ठा मरुतो यंतु सेनया ॥ ६ ॥
प्रेता जयता नर उग्रा वः संतु बाहवः । तीक्ष्णेषवोऽबलधन्वनो हतोग्रायुधा अबलानुग्रबाहवः॥७॥
अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते । जयामित्रान्प्र पद्यस्व जह्येषां वरं वर मामीषां मोचि कश्चन८
त्वया मन्यो सरथमारुजंतो हर्षमाणोः । संशिता मरुची । इति विशेषः । सूक्तं० ।
यस्ते मन्यो विधद्वज्रसायक सह ओजः पुष्यति विश्वमानुषक् ।
साह्याम दासमार्यं त्वया युजा वयं सहस्कृतेन सहसा सहस्वता ॥ १ ॥
एता देवसेनाः सूर्यकेतवः सचेतसः । अमित्रान्नो जयंतु स्वाहा ॥ ( ५।४।२१।१२ )
अव मन्युरवायताव बाहू मनोयुजा । पराशर त्वं तेषां पराञ्चं शुष्मं मर्दयाधा नो रयि मा कृधि ।१।
निर्हस्तेभ्यो नैर्हस्तं यं देवाः शरुमस्यथ युवृश्चामि शत्रूणां बाहूननेन हविषाहं ॥ २ ॥
इंद्रश्चकार प्रथमं नैर्हस्तमसुरेभ्यः । जयंतु सत्वानो मम स्थिरेणेंद्रेण मेदिना ॥ ३ ॥
निर्हस्तः शत्रुरभिदासन्नस्तु ये सेनाभिर्युधमायन्त्यस्मान् ।
समर्पयेंद्र महता वधेन द्रात्वेषामघहारो विविद्धः ॥ १ ॥
आतन्वाना आयच्छंतोऽस्यंतो ये च धावथ । निर्हस्ताः शत्रवः स्थनेंद्रो वोऽद्य पराशरीत् ॥ २ ॥
निर्हस्ताः सन्तु शत्रवोऽङ्गैषां म्लापयामसि । अथैषामिंद्र वेदांसि शतशो वि भजामहै ॥ ३ ॥
परि वर्त्मानि सर्वत इंद्रः पूषा च सस्रतुः । मुह्यंत्वद्यामूः सेना अमित्राणां परस्तरां ॥ १ ॥
मूढा अमित्राश्चरताशीर्षाण इवाहयः । तेषां वो अग्निमूढानामिंद्रो हंतु वरंवरं ॥ २ ॥
ऐषु नह्य वृषाजिनं हरिणस्याभियं कृधि ॥ पराङमित्र एषत्वर्वाची गौरुपेषतु ॥ ३ ॥
अभिभूर्यज्ञो अभिभूरग्निरभिभूः सोमो ।
अभिभूरिंद्र १ ःम्य १ हं विश्वाः पृतना यथा सान्येवा विधेमाग्निहोत्रा इद्र हविः ॥ १ ॥
स्वधास्तु मित्रावरुणा विपश्चिता प्रजावत् क्षत्रं मधुपनेह पिन्वतं ॥
बाधेथां दूरं निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुक्तमस्मत् ॥ २ ॥
इमंवीरमनु हर्षध्वमुग्रमिंद्रं सखायो अनुसंरभध्वं । ग्रामजितं गोजितं वज्रबाहुं जयंतमज्मप्रमृणंतमोजसा ।३
इंद्रो जयाति न पराजयाता अधिराजो राजसु राजयातै ।
चर्कृत्य ईड्यो वंद्यश्चोपसद्यो नमस्यो भवेह ॥ १ ॥
त्वमिंद्राधिराजः श्रवस्युस्त्वं भूरभिभूतिर्जनानां । त्वं दैवीर्विश इमा वि राजा युष्मत् क्षत्रमजरं ते अस्तु ।२
प्राच्या दिशस्त्वमिंद्रासि राजोतोदीच्या दिशो वृत्रहञ्छत्रुहोसि ।
यत्र यंति स्रोत्यास्तज्जितं ते दक्षिणतो वृषभ एषि हव्यः ॥ ३ ॥

---

१ घवयदुईअ-रुज । २ अनटयवग्र-मनोषा । ३ अ. वे. ४।३१।१ । ४ अ. वे. ७।३२ । ५ क-सचेतस्यः । ६ अ वे. ६।७।६५, ७ अ. वे. ६।६६, ८ घकयअनटयव-समं.ये । ९ अ. वे. ६।६७ । १० १ अ. वे. ६।९७, ११ कघअनब ग्ध्यस्मत् । १२ अ. वे. ६।९८,

अभि त्वेंद्र वरिमतः पुरा त्वांहूरणाद्धुवे । ह्वयाम्युग्रं चेत्तारं पुरुणामानमेकजम् ॥ १ ॥
यो अद्य सेन्यो वधो जिघांसं न उदीरते । इंद्रस्य तत्र बाहू समंतं परि दद्मः ॥ २ ॥
परि दद्म इंद्रस्य बाहू समंतं त्रातुस्त्रायतां नः । देव सवितः सोमराजं सुमनसं मा कृणु स्वस्तये ॥ ३ ॥

## अपराजितगणः ॥

यः सपत्नो योऽसपत्नो यश्च द्विषञ् छपाति नः । देवास्तं सर्वे धूर्वंतु ब्रह्म० ॥ ( १।१९।४ )
शर्मवर्मैतदाहरास्यै नार्यां उपस्तरे । सिनीवालि प्रजायतां भगस्य सुमतावसत् ॥ १४।२।२१ ॥
उद्व ऊर्मिः शम्या हन्त्वापो योक्त्राणि मुंचत । माटुष्कृतौ व्येनसावघ्न्यावशुनमारताम् ॥ १६ ॥
अघोरचक्षुरपतिघ्नी स्योना शग्मा सुशेवा सुयमा गृहेभ्यः ॥
वीरसूर्देवृकामा स त्वयैधिषीमहि सुमनस्यमाना ॥ १७ ॥
इतश्च यदमुतश्च यद्वधं वरुण यावय ॥ वि महच्छर्म यच्छ वरीयो यावया वधं ॥ ( १।२०।३ )
अपेंद्रद्विष० ज्यायतो वधं० । विमहच्छर्म ॥ ( १।२१।४ )
न्यूयं नः प्रवतो नपान्मरुतः सूर्यत्वचसः । शर्मयच्छाथ सप्रथः ।
इममग्न आयुषे वर्चसे नय प्रियं रेतो वरुणमित्र । माते० ॥ ( २।२८।५ ) ॥
तिस्रो देवीर्महि नः शर्म यच्छत प्रजायै न स्तन्वे यच्च पुष्टं । मादास्महि प्रजया० ॥( ५।३।७ )
उरुव्यचा नो महिषः शर्म यच्छ । त्वस्मि० ॥ ८ ॥
इंद्रस्य शर्मासि । तं त्वा प्रपद्ये तं त्वा प्रविशामि सर्वगुः सर्वपूरुषः सर्वात्मा सर्वतनूः सह यन्मे स्वितेन ॥ ( ५।६।१४ ) ॥
अश्मवर्म मेऽसि यो मा प्राच्या दिशोऽघायुरभिदासात् । एतत्सऋच्छात् । यो मां दक्षिणाया: ॥
यो मा प्रतीच्याः० । यो मोदीच्याः० । यो मा ध्रुवाया' । यो मोर्ध्वायाः० ॥
बृहता मन उपह्वये मातरिश्वना प्राणापानौ।सूर्याच्चक्षुरंतारिक्षाच्छ्रोत्रं पृथिव्याः शरीरम्॥( ५।१०।१-८ )
येन देवा असुराणामोजांस्यवृणीध्वं । तेना नः शर्म यच्छत ॥ ( ६।१।७।३ )
यथा वृक्षं लिबुजा समंतं परिषस्वजे । एवा परिष्वजस्व मां ।
यथा मां कामिन्यसो यथा मन्नापगा असः ॥ ( ६।१।७।१-२ )
यथेमे द्यावापृथिवी सद्यः पर्येति सूर्यः । एवा पर्येमि ते मनो यथा मां काम० ।
यथा सुपर्णः प्रपतन्पक्षौ निहंति भूम्यां । एवा नि हन्मि ते मनो यथा मां काम० ।
वांछ मे तन्वं पादौ वाञ्छाक्ष्यौ वाञ्छसक्थ्यौ । अक्षौ वृषण्यंत्याः केशा मां ते कामेन शुष्यंतु ॥
मम त्वादोषणिश्रिषं कृणोमि हृदयश्रिषं ॥ ( ६।१।९।१-२ )
यथावतः परागसो माभुष्याहं कदाचन । अनडुद्भ्यस्त्वं प्रथमं धेनुभ्यस्त्वमरुंधतिः ।
अधेनवे[1] पवसे शर्म यच्छ चतुष्पदे । शर्म यच्छत्वोषधिः सह देवीररुंधती ।
करत्पयस्वं तं गोष्ठमयक्ष्मा उत पुरुषान् । निस्त्ररूपां सुभगामस्यादद्दामि जीवलां ॥
सा नो रुद्रस्यास्तां हेतिं दूरं नयतु गोभ्यः । तनुष्टे वाजि तन्वक्षमभ्यधावतु शर्म तुभ्यं ॥
अपक्रतो महोपरुणाय यदेभोदिर्वाम ज्योतिस्वामेर्मीयाव ॥
वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे ॥

---

१ अ. वे. ६।६६ । २ ध-वर्मः घकयअनर्हरटव-स्तभग । ३ घ-ह । ४ अ. वे. ८।२।७ ।

यस्य उपस्था उर्वी ] तरिक्षं । सा नः शर्म त्रिवरूथं नियच्छात् ।
वेशानां पत्नीरुशती ०[१] यच्छंतु समाप्तौ ।
अधिब्रूहि मां रमया सृजे तवैव सन्त्सर्वहायाइहास्तु ॥
भद्राशर्वौ मृड तं शर्म यच्छ मयसिध्यदुरितं धत्तमायुः ।
रक्षोहणं वाजि० १ ।

स्वस्तिं मे द्यावापृथिवी स्वस्तिं मित्रो अकरयं ॥ स्वस्तिं मे ब्रह्मणस्पतिः स्वस्ति सविताकरत् ॥७।३०॥
वर्म मे द्यावापृथिवी स्वस्त्ययनोक्ता १ । ऐंद्राग्नं वर्म० १ इयमपि तत्र ॥
वर्म मह्यमयं मणिः फालाज्जातः करिष्यति । पूर्णोमंथेन मामगइस्तेन सह वर्चसा ।
'मित्रः पृथिव्योद्क्रामत्तां पुरं प्रणयामि वः । तामाविशतता प्रविशत सा वः शर्म च वर्म यच्छतु ।
वायुरंतरिक्षेणोद्० । सूर्योदिवो० । चंद्रमानक्षत्रैरु० । सोम उष्पधीरु० । यज्ञोदक्षिणाभिरु० । समुद्रो

नदीभिरु० । ब्रह्म ब्रह्मचारिभिरु० । इन्द्रो वीर्येणो० । देवा अमृतेणो० । प्रजापतिः प्रजापतीभिरु० ॥
अप न्यधुः पौरुषेयं वधं यमिंद्राग्नी धाता सविता बृहस्पतिः ।
सोमो राजा वरुणो अश्विना यमः पूषास्मान्परिपातु मृत्योः ॥ १ ॥
यानि चकार भुवनस्य यस्पतिः प्रजापतिर्मातरिश्वा प्रजाभ्यः ।
प्रदिशो यानि वसते दिशश्च तानि मे वर्माणि बहुलानि संतु ॥ २ ॥

यत्ते तनूष्वनह्यंत देवा द्युराजयो देहिनः । इंद्रो यच्चक्रे वर्म तदस्मान्पातु सर्वतः ॥ ३ ॥
वर्म मे द्यावापृथिवी स्वस्त्ययनोक्ता ।
अपेंसपत्नं पुरस्तात्पश्चान्नो अभयं कृतं । सविता दक्षिण उत्तरान्माशचीपतिः ॥ १ ॥
दिवो मादित्या रक्षंतु भूम्या रक्षंत्वग्नयः । इंद्राग्नी रक्षतां मा पुरस्तादश्विनावभितः शर्म यच्छतां ।
तिरश्चीनघ्न्या रक्षतु जातवेदा भूतकृतो मे सर्वतः संतु वर्म ॥ २ ॥ इति शर्मवर्मगणः ।

अथ पूर्वोक्ता अशीत्युत्तरशतं श्लोकाः ॥

सुरास्त्वामभिषिंचंतु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ १ ॥
प्रद्युम्नश्चानिरुद्धश्च भवंतु विजयाय ते । आखंडलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥ २ ॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहितः शेषो दिक्पालाः पांतु ते सदा ॥ ३ ॥
रुद्रो धर्मो मनुर्दक्षो रुचिः श्रद्धा तु पार्थिव । भृगुरत्रिर्वसिष्ठश्च सनकश्च सनंदन. ॥ ४ ॥

सनत्कुमारश्च तथा भगवानपि चांगिराः । पुलहश्च पुलस्त्यश्च मरीचिः कश्यपः प्रभु ॥ ५ ॥
एते त्वामभिषिंचंतु प्रजाध्यक्षा. समागताः । प्रभाकरा बर्हिषदो अग्निष्वात्तास्तथैव च ॥ ६ ॥
क्रव्यादाश्चोपहूताश्च आज्यपाश्च सुकालिनः । एते त्वामभिषिंचंतु पितरश्चाग्निभिः सह ॥ ७ ॥
लक्ष्मीर्देवी शची ख्यातिरनसूया तथा स्मृतिः । संभूतिः सन्नतिश्चैव क्षमा प्रीतिरथैव च ॥ ८ ॥

---

१ घअनईरयट—फलाग्रात । २ अ वे १९।१९।१-११ । ३ अ. वे. १९।२० । ४ घ-धाता । —५ अ. वे. १९।१६।१-२ । ६ घ-च्युनः ।

स्वाहा स्वधा च ते राजन्नभिषिंचंतु मातरः । कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिर्लक्ष्मीस्तथा क्रिया ॥ ९ ॥
बुद्धिर्लज्जा वपुः शांतिस्तुष्टिः सिद्धिश्च पार्थिव । एतास्त्वामभिषिंचंतु धर्मपत्न्यः समागताः ॥१०॥
अरुंधती वसुर्यामी लंबाभानुर्मरुत्वती । संकल्पा च मुहूर्ता च साध्या विश्वा तथैव च ॥ ११ ॥
धर्मपत्न्यो दशान्यास्त्वामभिषिंचंतु पार्थिव । अदितिर्दितिर्दनुः काला सुरुष्टानायुषामुनिः ॥ १२ ॥
कद्रूः क्रोधवशा प्राची विनता सुरभिस्तथा । एतास्त्वामभिषिंचंतु कश्यपस्य प्रियाः स्त्रियः ॥ १३ ॥
पत्नी ते बहुपुत्रस्य सुपुत्रा या च भामिनी । समायात्वभिषेकाय विजयाय च पार्थिव ॥ १४ ॥
कृशाश्वपत्नी च तथा सुप्रभा तु जया तथा । सुदर्शना तयोः पुत्रो विजयं विदधातु ते ॥ १५ ॥
मनोरमा भानुमती विशाला या च बाहुदा । अरिष्टनेमिपत्न्यस्त्वामभिषिंचंतु पार्थिव ॥ १६ ॥
कृत्तिका रोहिणी देवी विशाखा च तथा नृप । अनुराधा तथा ज्येष्ठा मूलं च वसुधाधिप ॥१७॥
आषाढा च तथा पूर्वा तथा या चोत्तराह्वया । अभिजिच्च तथा श्रुत्या धनिष्ठा च तथैव च ॥१८॥
तथा शतभिषक् चैव पूर्वाभाद्रपदा तथा । उत्तरा रेवती राजन् अश्विनी भरणी तथा ॥ १९ ॥
एतास्त्वामभिषिंचंतु सोमपत्न्यः समागताः । मृगी च मृगचर्मा च श्वेतमर्द्दचरा हरिः ॥ २० ॥
भूता च कपिला दंष्ट्रा सुरभी सुरसा तथा । एताः पुलस्त्यपत्न्यस्त्वामभिषिंचंतु पार्थिव ॥ २१ ॥
श्येनी भासी तथा क्रौंची धृतराष्ट्री तथा शुकी । पत्न्यस्त्वामभिषिंचंतु अरुणस्यार्कसारथेः ॥ २२ ॥
आयतिर्नियतिश्चैव रात्रिर्निद्रा च पार्थिव । एतास्त्वामभिषिंचंतु लोकसंस्थानहेतवः ॥ २३ ॥
उमा सेना शची चैव धूमोर्णा निर्ऋतिस्तथा । गौरी शिवा च बुद्धिश्च वडवा चैव नंदना ॥ २४ ॥
आनृषमा च तथा ज्योत्स्ना या च देवी वनस्पतिः । एतास्त्वामभिषिंचंतु कालस्यावयवाः शुभाः ॥ २५ ॥
आदित्यश्चंद्रमा भौमो बुधजीवसितार्कजाः । ग्रहास्त्वामभिषिंचंतु राहुः केतुश्च तर्पिताः ॥
स्वायंभुवो मनोः पुत्रो मनुः स्वारोचिषस्तथा । औत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥
वैवस्वतोथ सावर्णी दक्षब्रह्मसुतावुभौ । धर्मपुत्रो रुद्रपुत्रो रौच्यो भौत्यश्च यो मनुः ॥
एते त्वामभिषिंचंतु मनवश्च चतुर्दश ॥
विश्वभुग्विश्वधाग्निश्च शांतः सुसुखी विभुः । मनोजवस्तथोजस्वी बलिरद्भुतभांतिकौ ॥
वृषश्च कतिधामा च दिविस्पृक् शुचिरेव च । एते त्वामभिषिंचंतु देवपालाश्चतुर्दश ॥
रैवंतश्च कुमारश्च तथा वर्चाः कुमारकः । वीरभद्रश्च नंदी च विश्वकर्मा पुरोजवः ॥
एते त्वामभिषिंचंतु सुरमुख्याः समागताः । आत्मा ह्यायुमंतो दक्षः पदुः प्राणस्तथैव च ॥
हविष्यश्च गविष्ठश्च क्रतः सत्यश्च पार्थिव । अभिषिंचंतु राजंस्त्वां देवा ह्यंगिरसो दश ॥
क्रतुर्दक्षो वसुः सत्यः कालकामो मुनिस्तथा । धृतिमान्मनुजश्चैव रोचमानस्तथैव च ॥
एते त्वामभिषिंचंतु विश्वेदेवास्तथा दश ॥
अजैकपादहिर्बुध्न्यः पुष्पकेतुस्तथा बुधः । भरतश्च तथा मृत्युः कापालिरथ किंकिणिः ॥
एकादशैते रुद्रास्त्वामभिषिंचंतु पार्थिव ॥
भुवनो भावनश्चैव सुजन्यः सुजनस्तथा । क्रतुः सुवर्णस्तर्क्ष्यश्च व्यजश्च व्यसुतस्तथा ॥
प्रसवश्चाव्ययश्चैव दक्षश्च मनुजाधिप । एते त्वामभिषिंचंतु भृगवो नाम देवताः ॥
मनोमहश्च प्राणश्च नरोपानश्च वीर्यवान् । चितिर्हयो नयश्चैव हंसो नारायणस्तथा ॥
विभुश्चापि द्विविश्रेष्ठस्तथान्यश्च जगद्धितः । एते त्वामभिषिंचंतु साध्या द्वादश पार्थिव ॥
धाता मित्रोऽर्यमा पूषा शक्रोंऽशो वरुणो भगः । त्वष्टा विवस्वान्सविता विष्णुर्द्वादशमः स्मृतः ॥

---

१ घख-इत्न ह्याभिषेच । २ घअनर्हरमदय वरा । ३ घख मृगा । ४ खख एतेस्त्वां ।

मांधाता मुचकुंदश्च तथा राजा पुरूरवाः । इक्ष्वाकुश्च यदुश्चैव पुरुर्भूरिश्रवास्तथा ॥
अंबरीषश्च नाभागो बृहदश्वो महाहनुः । प्रद्युम्नश्चाथ सुद्युम्नो भूरिद्युम्नश्च संजयः ॥
एते चान्ये च राजानस्तव राजन् दिवंगताः । समायांत्वभिषेकाय विजयाय तथा श्रिये ॥
पर्जन्याद्यास्तथा भूप मेघाः सर्वे समागताः । द्रुमाश्चौषधयो रत्नं बीजानि विविधानि च ॥
सर्वे त्वामभिषिंचंतु राजराज्ये सुसत्वराः ॥
पुरुषश्चाप्रमेयात्मा महाभूतानि यानि च । पृथिवीवायुराकाशमापोज्योतिस्तथैव च ॥
मनो बुद्धिस्तथैवात्मा अव्यक्तश्च महीपते । एते त्वामभिषिंचंतु समेता वसुधाधिप ॥
रुक्मभौमः शिलाभौमः पातालो नीलमृत्तिकः । पीतरक्तासिताश्चैव श्वेतभौमास्तथैव च ॥
एते त्वामभिषिंचंतु विजयाय महीपते ॥
भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महर्जनः । तपः सत्यं च राजेंद्र विजयाय भवंतु ते ॥
जंबू शाकःकुशः क्रौंचः शाल्मलीद्वय एव च । प्लक्षश्च पुष्करश्चैव स्वस्वाम्यं प्रदिशंतु ते ॥
उत्तराः कुरवः पुण्या रम्या हैरण्वतास्तथा । भद्राश्वः केतुमालश्च वर्षश्चैव इलावृतः ॥
हरिवर्षः किंपुरुषो वर्षो भारतसंज्ञकः । एते त्वामभिषिंचंतु समेत्य वसुधाधिप ॥
इंद्रद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान् । नागद्वीपस्तथा सौम्यो गांधर्वो वरुणस्तथा ॥
अयं च नवमस्तेषां स्वस्वाम्यं प्रदिशंतु ते ॥
हिमवान् हेमकूटश्च निषधो नील एव तु । श्वेतशृंगोगवान्मेरुर्माल्यवद्गंधमादनाः ॥
महेंद्रो मलयः सह्यः शुक्तिमानृक्षवांस्तथा । विंध्यश्च पारियात्रश्च सर्व एव महीधराः ॥
समागम्याभिषिंचंतु त्वामद्य वसुधाधिप ॥
ऋग्वेदोऽथ यजुर्वेदः सामवेदस्तथैव च । अथर्ववेदो वेदास्त्वां अभिषिंचंतु पार्थिव ॥
इतिहासो धनुर्वेदो गांधर्वश्चायुसंज्ञितः । सतांपवेदाश्च तथा विजयाय भवंतु ते ॥
शिक्षा कल्पो व्याकरणं निरुक्त ज्योतिषां गतिः । छंदो विविक्तिषेडानि विजयाय भवंतु ते ॥
अंगानि वेदाश्चत्वारो मीमांसान्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥
सांख्ययोगः पांचरात्रो वेदः पाशुपतं तथा । कृतांतपंचकं चैव शास्त्राणि विविधानि च ॥
गायत्री पापशमनी गंगा देवी महा शिवा । गांधारी च तथा नारी विजयं प्रदिशंतु ते ॥
देवदानवगंधर्वा यक्षराक्षसपन्नगाः । ऋषयो मनवो गावो देवमातर एव च ॥
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः । अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥
औषधानि च रत्नानि कालस्यावयवाश्च ये । स्थानानि च समस्तानि पुण्यान्यायतनानि च ॥
जीमूतानि च सर्वाणि तद्विकाराश्च सर्वशः । उक्तानि चाप्यनुक्तानि विजयाय भवंतु ते ॥
लवणक्षारतोयाश्च घृतमंडोदकास्तथा । दधिमंडोदकाश्चैव सुरोदश्च नराधिप ॥
तथैवेक्षुरसोदश्च तथा स्वादूदकश्च यः । गर्भोदकश्च तोयैस्त्वामभिषिंचंतु पार्थिव ॥
चत्वारः सागराश्चैव स्वेन तोयेन पार्थिव । समागम्याभिषेके तु विजयं प्रदिशंतु ते ॥
पुष्करश्च प्रयागश्च प्रभासो नैमिषं तथा । तथा ब्रह्मसरः पुण्यं गयाशीर्षं च पार्थिव ॥
कालोदको नंदिकुंडस्तथैवोत्तरमानसः । स्वर्गमार्गप्रदश्चैव तथा पंचनदश्च यः ॥

१ क्ष पाठः । २ ज्ञनपत्रघ—पति । ३ ख–विविति । ४ ख–कशमिनी । ५ घ–मु द्यो

भृगुतीर्थं प्रभासश्च तथैवामरकंटकः । आश्रमः कालिकायाश्च तृणबिंदोस्तथाश्रमः ॥
गोतीर्थं चाग्नितीर्थं च विमलः स्वर्ग एव च । जंबूमार्गश्च विमलः पुण्यस्तंडुलिकाश्रमः ॥
कपिलश्च तथा तीर्थो तीर्थौ वातिकसंडिका । महासरस्तथागस्त्यकुमारीतीर्थमेव च ॥
अंगद्वारःकुशावर्तो बिल्वको नीलपर्वतः । वाराहः पर्वतश्चैव तीर्थं कनखलं तथा ॥
सुगंधा च धरा कुंभास्तथा शाकंभरीति या । भृगुतुंगः सकुब्जाम्रः कपिलस्य तथाश्रमः ॥
चमसोद्भेदनः पुण्यस्तथा विनशनं शुभः । अजतुंगश्च मोचश्च अश्वगंधश्च पार्थिव ॥
कालंजरः सकेदारो रुद्रकोटिस्तथैव च । महालयश्च राजेंद्र बदर्याश्रम एव च ॥
नंदा च सोमतीर्थं च सूर्यतीर्थं शतक्रतोः । अश्विनोर्वरुणस्याथ वायोर्वैश्रवणस्य च ॥
ब्रह्मणश्चैव शर्वस्य यमस्य च्यवनस्य च । विरूपाक्षस्य धर्मस्य तथा चाप्सरसां नृप ॥
ऋषीणां च वसूनां च साध्यानां मरुतां तथा । आदित्यानां च रुद्राणां तथा चांगिरसां नृप ॥
विश्वेदेवभृगूणां च तथान्येषां च मानद । प्लक्षप्रस्रवणश्चैव सुपुण्यः च नराधिप ॥
शालग्रामसरश्चैव वाराहो मानसस्तथा । कामाश्रमस्त्रिकूटश्च चित्रकूटस्तथैव च ॥
सपूर्वः क्रतुसारश्च तथाविष्णुपदं सरः । काम्पिल्यं च तथा तीर्थं वासुकेस्तीर्थमेव तु ॥
सिंधूत्तमस्तपोद्वारोऽन्यश्च सूर्पारकुंभकः । पुंडरीकश्च राजेन्द्र गंगासागरसंगमः ॥
सिंधुसागरयोश्चैव संगमः सुमनोहरः । तथा कुंभामसुंदश्च मानसं च तथा सरः ॥
तथा बिंदुसरः पुण्यं सरस्वच्छोदकं तथा । धर्मारण्यं फल्गुतीर्थमविमुक्तं तथैव च ॥
लौहित्यश्च तथा पुण्यो बदरी पावनः शिवः । तीर्थं सप्तर्षीणां च वन्हितीर्थं तु पार्थिव ॥
पुण्यवस्त्रापथो मेघनागलेशस्तु पार्थिव । पुष्पन्यासस्तथा चैव तीर्थो हंसपदस्तथा ॥
अश्वतीर्थश्च कर्णाश्वो मणिमंथस्तथैव च । देविका इंद्रमार्गश्च स्वर्णबिन्दुस्तथैव च ॥
आहल्यकस्तथा तीर्थस्तीर्थश्चैरावतास्तथा । ऐरावतीसमुद्भेदे तीर्थं मोगयक्षात्परं ॥
करवीराह्वयं चैव नागमो वणिकस्तथा । पापमोचनिकश्चैव ऋणमोचनिकस्तथा ॥
उद्वेजनस्तथा पुण्यः संपूज्यः सरसां वरः । देवमल्लसरः पुण्यं सार्पिर्दधि तु पार्थिव ॥
एते चान्ये च बहवः पुण्यसंकीर्तिनाः शुभाः । तोयैस्त्वामभिषिंचंतु सर्वपातकनाशनैः ॥
गंगा महानदी पुण्या ह्रदिनी ह्लादिनी तथा । पावनी च तथा सीता चक्षुः सिंधुश्च नर्मदा ॥
सुप्रभा कांचनाक्षी च विशाला मानसी ह्रदा । सरस्वत्योघनादी च सुवेणा विमलोदका ॥
शिप्रा शोणश्च तथैव सरयूर्गंडकी तथा । अच्छोदा च त्रिभागा च चंद्रभागा इरावती ॥
वितस्ता देविकारंभा केशा देवह्रदा शिवा । तथा चेक्षुमती पुण्या कौशिकी यमुना तथा ॥
गोमती धूतपापा च बाहुदा तु सरस्वती । निर्विन्ध्या च तृतीया च लौहितश्च महानदः ॥
देवस्मृतिर्वेदमाता वेदपुर्धुरदा तथा । पर्णाशा वंदना चैव सदानीरा कुमुद्वती ॥
पीता चर्मण्वती धूमा विदर्भा वेणुमत्यपि । अवती च तथा कुंती सुरसा च पलाशिनी ॥
मंदाकिनी दशार्णा च सिंधुरेखा कुमुद्वती । तपती पिप्पली श्येनी करतोया पिशाचिका ॥
चित्रोपला चित्ररथा मंजुला वाकुलामती । शुक्तिमती सिनीआर्ली मंहूणी तृपिका कपूः ॥
तापी पयोष्णी निर्विन्ध्याऽसिता च निषधावनी । वेणा वैतरिणी भीमा मंद एव तथा कुहूः ॥

---

१ ए तें । २ टक्कपअजय-भनरी । ३ पय भनजय मोगर्ना । ४ सा-ग ट-चरीग

तोया चैव महागौरी दुर्गातिर्मिगिला तथा । गोदावरी भीमरथी कृष्णवर्णा भयंकरा ॥
तुंगभद्रा सुप्रकारा वात्या कावेरिव च । कृतमाला ताम्रवर्णा पुष्पभद्रोत्पलावती ॥
नृसमा ऋषिकुल्या च इक्षुका त्रिदिवालया । लांगुलिनी वंशधरी जंबूश्च सुकलावती ॥
ऋषिका वरवेगा च मंदगा मंदवाहिनी । क्षमा देवी दया व्योमा पयोष्णी कालवाहिनी ॥
कंपना च विशाला च करतोया सुवाहिनी । ताम्रारुणा वेत्रवती सुभद्रा चाश्ववत्यपि ॥
अद्रिका च इमा चैव सुप्रकारा हिरण्मयी । आपगालोपलाभाषी संध्या तु मदशानदी ॥
महेंद्रवाणी शाला च मालिका वलयावती । नीलोद्भूतकरा चैव बाहुदा वनवासिनी ॥
नंदा चापरनंदा च सुनंदा वसुवासिनी । एताश्चान्याश्च राजेंद्र नद्यस्त्वां विविधोदकाः ॥
सर्वपापप्रशमनाः सर्वलोकस्य मातरः । सतोयपूर्णैः कलशैरभिषिंचंतु पार्थिव ॥
एतैर्यथोक्तैर्नृपराजराज्ये दत्ताभिषेकः पृथिवीं समग्रां ।
ससागरां भुंक्ष्व चिरं च जीव । धर्मे च ते बुद्धिरतीव चास्तु ॥
इति श्रीमट्टशंकरात्मजभट्टनीलकंठकृते राजनीतिमयूखे राज्याभिषेकप्रयोगः ॥

एवं कृताभिषेको राज्यं कुर्यात् । तच्च सप्तांगं ॥ तानि च ' स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि चेति ' ॥ कामंदकोऽपि । ( १।१६ )

" स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् । एतावदुच्यते राज्यं सत्वबुद्धिव्यपाश्रयं ॥ "

नीतिशास्त्रस्य इष्टार्थत्वाच्च क्रमेऽभिनिवेशः कार्यः । तत्र स्वामी राजा ।
तत्र देवानामंशाः संतीत्याह मनुः ( ७।४ )

" इंद्रानिलयमार्काणां अग्नेश्च वरुणस्य च । इंद्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥
" यस्मादेषां सुरेंद्राणां मात्राभ्यो निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥
' सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट् । स महेंद्रः स ईशः स कुबेरश्च प्रभावन " ॥ इति ॥

कामंदकोऽपि ( १।९–११; १२–१५ )

" राजाऽस्य जगतो हेतुर्वृद्धेर्वृद्धाभिसंमतः । नयनानन्दजननः शशांक इव तोयधेः ॥
" यदि न स्यान्नरपतिः सम्यक् नेता ततः प्रजा । अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥
" धार्मिकं पालनपरं सम्यक्परपुरंजयं । राजानमभिमन्यन्ते प्रजापतिमिव प्रजाः ॥
" न्यायप्रवृत्तो नृपतिरात्मानमथ च प्रजाः । त्रिवर्गेणोपसंधत्ते निहंति ध्रुवमन्यथा ॥
" धर्माद्वै पवनो राजा विधाय बुभुजे भुवं । अधर्माचैव नहुषः प्रतिपेदे रसातलं ॥
" तस्माद्धर्मं पुरस्कृत्य यतेतार्थाय पार्थिवः । धर्मेण वर्द्धते राष्ट्रं तस्य स्वादु फलं श्रियः ॥ "

राजगुणास्तद्वृत्तं च नीतिसारे ( कामंदकीये १–१८–२० )

" न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा । सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधं ॥
" नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः । विनयो हीन्द्रियजयस्तद्युक्तः शास्त्रमृच्छति । "

तथा ( १।२१–२५ )

" शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता । उत्साहो वाग्मिता दार्ढ्यं आपत्क्लेशसहिष्णुता ॥
" प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता । कुलं शीलं दमश्चेति गुणाः संपत्तिहेतवः ।

१ अधमवचर–गिरितामया । २ क्षु–ना ।

